സംസ്കൃതശ്രീഃ

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

SAMSKṚTAŚRĪ

ஸம்ஸ்க்ருதஸ்ரீ



A Fortnightly Bulletin of the Samskrit Education Society, Madras.




Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—12

वागीश्वर्यै नमः

अरुण किरणजालैः रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता ।
इतर वरकराढ्या फुल्लकल्हार संस्था
निवसतु हृदि बाला नित्यकल्याणशीला ॥

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5082-रौद्र-मीन-25 (4-12) 7—4—81

सरस्वत्यै नमो यस्याः प्रसादात्पुण्यकर्मभिः ।
बुद्धिदर्पणसंक्रान्तं जगदध्यक्षमीक्ष्यते ॥

—चरकसंहिताव्याख्यातुः चक्रपाणिदत्तस्य

## चरैव चरैव (८)

दैवे पुरुषकारे च किंस्वित् श्रेष्ठम् ? इति पृच्छति युधिष्ठिरः पितामहं भीष्मम् । (अनुशासनपर्वणि ६) समादधाति भीष्मः— सुकृतं दुष्कृतं च बीजम् । यादृशमुप्यते बीजं, तादृशं फलम् । प्राक्कृतं (सुकृतं दुष्कृतं वा) न स्वतन्त्रतया फलति । कर्षकं भूमिं कालं चान्यदन्यच्च अपेक्षते फलनाय । तदा पुरुषकारसापेक्षो भवति विधिः । "यथा बीजं विना क्षेत्रं उप्तं भवति निष्फलम् । तथा पुरुषकारेण विना दैवं न सिध्यति ॥" कर्म स्वसंपत्त्यै पुरुषकारमपेक्षते ।

अथ कोऽयं पुरुषकारः ? "क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।" पूर्वस्मिन् जन्मनि (पूर्वेषु जन्मसु वा) कृतं कर्म—विधिरूपं, इह जन्मनि क्रियमाणं कर्म अपेक्षते स्वविकासाय । अनुकूलपुरुषकारालाभे नोद्भिन्ते, न वा प्रतनुते । प्रतिकूलपुरुषकारसन्निधौ गूढं अजातावयवविकासं कालप्रतीक्षि तत्तथैव तिष्ठति । प्रतिकूलपुरुषकारपौष्कल्येऽपि क्वचित् कदाचित् स्वानुकूलं पुरुषकारं लभते, येनाप्रतीक्षितमुद्भिन्ते, तनुं लघुमपि तमवलंब्य प्ररोहति अप्रशमार्हतया । नलरामयुधिष्ठिरेषु विधेरुल्लास

एतादृशः । प्ररोहावकाशलाभेऽपि विधिर्न तेषु पूर्णतया प्रभवति, यत्ते नानुसरन्ति विधिप्रणुन्नां वासनां जितेन्द्रियतया । अतो विधिं संकोचयितुं ते प्रभवन्ति । अतो जितेन्द्रियेषु, विधेः पुरुषकारः श्रेष्ठः, अजितेन्द्रियेषु पुरुषकाराद्विधिः श्रेष्ठ इत्यापतति ।

विधिविकासको विधिसंकोचकश्च पुरुषकारः कीदृशः ? अग्निकणः कश्चिदक्षय्यः । स हि वर्तितैलदीपसमायोगात्प्रज्वलति । कणीभूतः अग्निर्विधिः । वर्तितैलदीपयोगः पुरुषकारः । सुकृतात्मा यदि स विधिः, तर्हि तं इह जन्मनि सुकृताचरणरूपानुकूलवर्त्यादियोगैः प्रज्वालयामः । दुष्कृताचरणरूपजलादियोगे स सुकृतात्मा विधिः न प्रकाशते, अनुकूलवातावरणाऽभावात् । अतः सुकृतमपि फलितुं स्वानुकूलं पुरुषकारमपेक्षते । दुष्कृतात्मा यदि स विधिः, तर्हि इह जन्मनि दुष्कृताचरणरूपानुकूल-वर्त्यादियोगे प्रज्वलति, अन्यथा यथातथं गूढस्तिष्ठति । "यथाग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान् भवेत् । तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥ यथा तैलक्षयाद्दीपः प्रह्रासमुपगच्छति । तथा कर्मक्षयाद्दैवं प्रह्रासमुपगच्छति" ॥ अचिन्त्योपनामं विधिं सुकृतरूपं दुष्कृतरूपं वा अविजानन्तोऽपि दुष्कृतप्रतिकूलस्य सुकृतानुकूलस्य च कर्मण आचरणेन स्वानुकूलं घटयितुं प्रभवामः इति व्यासो भगवानादिशति मार्गम् । तर्हि तथा चर यथा विधिरनुकूलस्ते भविता ।

## "तिरुवाचकोपनिषत्"

वि. एस्. नरसिंहन्, तिरुवेडकम्, मदुरै

तिरुवाचक पद्येऽपि ईदृशमेव वर्णितम् :—

*சிரிப்பார் களிப்பார் தேனிப்பார்*
*திரண்டு திரண்டுன் திரு வார்த்தை*
*விரிப்பார் கேட்பார் மெச்சுவார்*
*வெவ்வேறிருந்துன் திருநாமம்*
*தரிப்பர் பொன்னம்பலத்தாடுந்*
*தலைவா வென்பர்.* (கோயில் மூத்தத்திருப்பதிகம்)

सद्वस्तु अवाङ्मनसगोचरमतीन्द्रियं च भवति। श्रुत्यैव ब्रह्मणः स्वरूपं तटस्थलक्षणं च निरूपितम्। 'यो वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः' इति च दृष्टम्। एतदेव कविना अत्र प्रोक्तम्।

(a) *வேதங்கள் ஐயா என ஓங்கி ஆழ்ந்து அகன்ற நுண்ணியனே !*

(b) *வணங்கு நின்னை மண்ணும் விண்ணும் வேத நான்கு மோலமிட்டுணங்கு நின்னை எய்தலுற்று.*

अत्र '*எய்தலுற்று*' इति पदं ब्रह्मणः स्वरूपं पूर्णतया प्रकटयितुं वेदाः अपि असमर्थाः इति सूचयति।

'आकाशाद्वायुः .... स एष पुरुषो अन्नरसमयः' इति श्रुति-वाक्यम्। एतेन वाक्येन पञ्चभूतवर्णनात् ब्रह्मणः वर्णनमपि व्यंग्य भावेन भवति। किमित्युक्ते भूतानां उपादानकारणं खलु ब्रह्म। अनया रीत्या कविना परब्रह्म संबोधितं अस्मिन् पद्ये।

(a) *அம்பரமே நிலனே அனல் காலொடு அப்பு ஆனவனே !*

(b) *வானாகி மண்ணாகி வளியாகி ஒளியாகி .... ....*

परब्रह्म द्विविधं सगुणं निर्गुणं इति। तिरुवाचके सगुणब्रह्म-लक्षणं कविना बहुधा प्रोक्तं स्वेष्टदेवताप्रशंसनं बहुधा कृतं च। ईश्वरः केवलं सगुणः परमेश्वरो न भवति। परन्तु पारमार्थिकस्वरूपं, निर्गुणं ब्रह्मापि स एव, परब्रह्म स्त्रीपुंभावातीतम्। "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" (मुण्डकोपनिषत्)। अनया रीत्या तिरुवाचकपद्यानि भवन्ति। *பெண் ஆண் அலி என்னும் பெற்றியன் காண்க ; பெண்மையனே ஆண்மையனே அலிப்பெற்றியனே*". तस्य इष्टदेवः न केवलं पार्वतीसमेतः परमेश्वरः, परन्तु साक्षात् निर्गुणं परब्रह्मैव इति अस्माकं स्पष्टीकरोति।

'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति सूक्ष्मबुद्धिं प्राप्तवतः प्रशंसति कठोपनिषत्। तस्मात् स्थूलमतयः पार-

मार्थिकं विषयं ज्ञातुमशक्ताः इति निर्णीतम् । तिलेषु तैलं व्याप्तमेव । परन्तु तैलं दृष्टिगोचरं न भवति खलु । एतद्रीत्या परब्रह्मापि सर्वत्र पूर्णं व्यापकं भवति । 'तिलेषु तैलं दधनीव सर्पिः' इत्यत्र उपनिषद्वाक्यम् । तथा, 'अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भमिवार्णवे' इति योग वाशिष्ठश्लोकोऽपि अत्र स्मर्तव्यः । एतत्सदृशानि एतानि तिरुवाचक-पद्यानि ।

*கள்ளுங் கீழுளும் மே உளும் யா வுளும்*
*எள்ளும் எண்ணெயும் போல் நின்ற எந்தையே.*

'तमसो मा ज्योतिर्गमय' इति मुमुक्षूणां प्रार्थना । तमः अविद्यास्वरूपम् । सद्वस्तु तु ज्योतिषामपि तज्ज्योतिः' इति भगवद्गीता । 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति कठवल्लीमन्त्रः । तथैव, "*மெய்ச்சுடருக்கெல்லா மொளி வந்த பூங்கழல் உத்தரகோச மங்கையர்க்கரசே*" इति तिरुवाचके ।

तत्त्वज्ञानविषये देवाः अपि असमर्थाः एव । ते परब्रह्म पूर्णरूपेण न जानन्ति । "नैनद्देवा आप्नुवन्" (ईशावास्योपनिषत्), यक्षरूपेण तिष्ठतः परमेश्वरस्य समीपे अग्निः अगच्छत् । तेन क्षिप्तं तृणं दग्धुं न शशाक अग्निदेवः । पश्चात् वायुः तत्रागच्छत् । सोऽपि तत् तृणं चालयितुं न शशाक । अनया रीत्या केनोपनिषत् उपक्रमते । अत्र एतदपि सूचितव्यम् । वेदान्ते देवशब्दः इन्द्रियमपि सूचयति । नयनयोः अधिदेवता अग्निः, तथा श्रोत्रयोः वायुः । तस्मात् प्रत्यक्षेण (अक्षिद्वारा) अथवा बहुधा श्रुतेन अयं आत्मा न लक्ष्यः । *எண்ணந்தான் தடுமாறி இமையோர் கூட்டம் எய்துமாறு அறியாத எந்தாய்*" (तिरुवाचकं) अत्र '*இமையோர்*' इति शब्दः देवान् सूचयति, निमीलनकर्माभावेन । सर्वे देवाः परमपदं प्राप्तुं मार्गमजानन्तः अतिष्ठन्निति उपनिषदाशयमेव उद्घोषयति अत्र द्राविडाचार्यः ।

अथ प्रयोजनमधिकृत्य विचारं कुर्मः। 'फलमनुद्दिश्य न मन्दोऽपि प्रवर्तते'। आत्मज्ञानेन किं प्रयोजनमिति साधकेन अवश्यं चिन्तयितव्यम्। व्यावहारिकविषये तथा विज्ञानशास्त्रे च 'यथा कर्म, तथा फलं' इति ज्ञातमेव। न्यूटन् महोदयेन अपि एतदेव कथितम्, 'Action and reaction are opposite and equal' इति। वेदान्ते ईदृशः विधिः न भवति। अत्र अल्पपरिश्रमेण महत् फलं अथवा महता परिश्रमेण अल्पं फलं च दृश्यते। अतः एव परिश्रमे तथा फले च समन्वयो न भवति। 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" (गीता)। उपरि 'ब्रह्मवित् ब्रह्मैव भवति' इति प्रयोजनस्य अनन्तत्वं तथा महत्त्वं च उक्तम्। ब्रह्मज्ञानप्राप्तिः महत् अतुल्यः भूमा इत्यादि अनेकप्रकारेण प्रकाशितम्। 'यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति' इत्यादि अनेकमन्त्राणि दृश्यन्ते।

यदि प्रयोजनं अनन्तं (भूमा) तर्हि परिश्रमोऽपि बहुकठिन एव इत्याशङ्का मा भूत्। किं तर्हि परमेश्वरः करुणासागरः। तस्मात् यदा भक्तः किञ्चिदपि यत्नं करोति, तदैव महादेवः अनुग्रहं करोति। 'यदा भक्तः ईश्वरं प्रति एकं पदं गच्छति, तदा ईश्वरः भक्तस्य अग्रतः सहस्रं पदानि आगच्छति'—इति श्रीरामकृष्णपरहंसेनापि उक्तम्। इदं तत्त्वं अद्भुतरसेन माणिक्यवाचकमहोदयः वर्णयति। 'भो शम्भो। अहं नीचः सामान्यश्च। अपकृष्टां जीवव्यक्तिं तव पादपङ्कजे समर्पितवान् अहं तव अखण्डकारुण्यसागरे मग्नवान्। एतद्रीत्या अनन्तं फलं आत्मानन्दरूपेण मया प्राप्तम्। परन्तु एतेन भवान् किं प्राप्तवान्? अल्पं जीवं मां स्वीकृत्य भवान् स्वमेव मह्यं अयच्छत्। अखण्डानन्दप्राप्तिना अहमेव आवयोः मध्ये श्रेष्ठो वणिक्।"

*"தந்ததுன் தன்னை கொண்ட தென்னை சங்கரா ஆர்கொலோ சதுரர்?*
*அந்தமில் லானந்தம் யான் பெற்றேன் யாது நீ பெற்றதென்பால்?"*

देवानुग्रहे यत् किञ्चिदमपि नियामकं नास्ति। तस्य पुरस्तात् साधकस्य तपस्या अथवा तीव्रा प्रार्थना अल्पैवेति तात्पर्यम्।

ईश्वरकृपा—जीवप्रयत्नः—एतयोर्मध्ये को बलिष्ठः ? एकमेवालं किम् ? अस्मिन् विषये बहवः अभिप्रायाः भवन्ति। 'उद्धरेदात्मनात्मानं' इति पुरुषप्रयत्नं स्तौति गीता। तत्रैव 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति प्रपत्तिमार्गानुष्ठाने महान् उपदेशोऽपि दृश्यते। 'प्रयत्नेन विना अप्राप्यो मोक्षः' इत्येको विचारः। 'ईश्वरानुग्रहादेव मुक्तिः' इति इतरेषां वादः। परन्तु सर्वे भक्ताः ज्ञानिनश्च स्वप्रयत्नेन आरभ्य, अन्ते ईश्वरानुग्रहेणैव सिद्धिं प्राप्नुवन्ति। एते द्वे परस्परं आश्रिते भवतः। 'तेन विना तृणमपि न चलति।' तस्मात् मत्प्रयत्नोऽप्यल्प एव"। एष एव भक्तानां दृढः अभिप्रायः। 'वसन्तवत् ईश्वरस्य अनुग्रहो वहति। तव हृदयगवाक्षं अपावृणु। तत्रैव तव प्रयत्नः। तत् अवश्यं त्वया कर्तव्यं'—इति परमहंसस्य उपदेशः। प्रयत्नादेव अनुग्रहं प्राप्तुं योग्यतासिद्धिर्भवति।

'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति अवधूतगीते प्रथमश्लोकः। शैवसिद्धान्ते ईश्वरस्य पञ्च कृत्यानि भवन्ति। अनुग्रहः अपि तेषामेको भवति। सदाशिवः अनुग्रहस्वरूपः। "नमाम्यहं ईश्वरं "एषा सामान्यक्रिया अपि तस्य करुणया एव मया क्रियते"—इति माणिक्यवाचकस्वामिनां सिद्धान्तः। "அவன் அருளாலே அவன் தாள் வணங்கி"—इदं वाक्यं 'अनुग्रह-स्वप्रयत्न'विषयं प्रति तस्य मतं स्पष्टीकरोति।

'अनेकता में एकता हिन्दुस्तानकी विशेषता इति हिन्दीभाषायामेकं वचनं भवति। उपनिषद्वाक्यानि, तिरुवाचकपद्यानि अधिकृत्य वयं विचारं अकुर्म। पारमार्थिकविषये वेदकालमुनीनां तथा माणिक्य-वाचकस्य च मध्ये न कोऽपि अभिप्रायभेदः इति स्पष्टम्। भारतीया संस्कृतिः वेदकालादारभ्य अद्यावधि "सूत्रे मणिगणा इव" नः सर्वान् एकीकुरुते। इमां श्रेष्ठां भारतीयवेदान्तसंस्कृतिं अनुसरेम इति विनयेन प्रार्थये।

# जगद्गुरुः (४)

मुल्लैवासल् रा. कृष्णमूर्तिशास्त्री, एम्. ए. संस्कृतकालेज्,
मैलापूर्, मद्रास्–४

११ अग्निः—स्वतेजसा शोभतेऽयम्। सर्वं वस्तु दहन्नपि अग्निः तन्नत्यां अशुद्धिं न गृह्णाति। तत्र तत्र काष्ठादौ प्रविशन् अयं तत्तद्रूपमिव स्वीकरोति। बहु वस्तु भक्षयन्नपि तृप्तो न भवति। एतादृशादग्नेः वयं इदं शिक्षामहे—(१) स्वभावसिद्धं वीर्यं कदापि न त्यजेत्। (२) सर्वत्र व्यवहरन्नपि लोकानां दोषैः असम्स्पृष्टो भवेत्। (३) आत्मा एकरूपोऽपि उपाधिभेदात् बहुरूपो भाति इति। (४) आशायाः सम्पूर्तिः विषयाणां भोगेन न जायेत—इति ज्ञातव्यम्।

१२ चन्द्रमाः—षोडशकलोपेतः अयं सर्वानाह्लादयति। पञ्चदशसु शुक्लपक्षरात्रिषु वर्धते चेत्, अन्यदा कृष्णपक्षरात्रिषु पञ्चदशसु क्रमेण क्षीयते। अथापि स्वयं सानन्दः वर्तते। कलाः गच्छन्ति, आगच्छन्ति च। तेन अविक्रियः विराजते। अतः चन्द्रः एवं अस्मान् उपदिशति यत्—बाह्यपदार्थानां शरीरस्य च वृद्धौ ह्रासे च समानैः भाव्यं, हर्षशोकौ परित्याज्यौ इति। आत्मा तावत् शरीरादिधर्मैः असम्स्पृष्टः वर्तते। उक्तं हि—

विसर्गाद्याः श्मशानान्ताः भावा देहस्य नात्मनः।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना॥ इति।

१३ सूर्यः — अयं सर्वदा चरन्नेव शोभते जगद्भासयन्। क्षणमपि न विरमति। सर्वेषां स्फूर्तिं ददाति स्थावरजङ्गमानाम्। अस्य आलस्य-शब्दार्थः न विदितः। अल्पं जलं घर्मकाले भूमेः स्वीकरोति। परन्तु सर्वं लोकं जलेन वर्षासु सन्तर्पयति। रविरयं अस्मान् इदं शिक्षयति (१) सर्वे सर्वदा अनलसाः चरन्तु, आचरन्तु च स्वकार्याणि। (२) परेभ्यः भूरि उपकारं कुर्युः इति।

इमौ सूर्याचन्द्रमसौ महत्तत्त्वं एकं लोकाय प्रख्यापयतः। प्रातः काले (कृष्णपक्षप्रथमायां) पश्चिमायां दिशि चन्द्रः अस्तमेति। पूर्वस्यां तु सूर्यः उदेति। प्रकृष्टतमौ इमौ प्रकाशौ एकदा उदयं अस्तं च गच्छन्तौ सर्वान् ज्ञापयतः—"दुःखे सुखे च समानता अभ्यसनीया। दुःखेभ्यः न भेतव्यम्। सुख दुःखे अस्थिरे दिवारात्रिवत् पुनःपुनरावर्तमाने" इति। सुष्ठूक्तम् कविकुलसार्वभौमेन—

"यात्येकतोऽस्तशिखरं पतिरोषधीनां
आविष्कृतोऽरुणपुरस्सर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु॥"

१४ हरिणः—स्वभावतो भीरुः अयं गीतप्रियो वर्तते। मृगयुः (व्याधः) हरिणान् ग्रहीतुं वाद्यं वादयति। अयं च मधुरेण वादित्रादिशब्देन मोहितः सन् व्याधस्य पाशेन बद्धो भवति! अस्य परतन्त्रतारूपं दुःखं आमरणादुपजायते। हन्त! श्रोत्रेण वञ्चितः सञ्जातो हरिणः। अतः इदं अस्माभिः हरिणोदाहरणेन बोद्धव्यं यत्—ग्राम्यगीतेषु अत्यासक्तो न भवेत्। श्रोत्रेन्द्रियतर्पकः सन् स्वात्मनः अनर्थं न ऋच्छेत्—इति। उक्तं हि—

"ग्राम्यगीतं न शृणुयात् यतिर्वनचरः क्वचित्।
शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात्॥ इति॥

१५ हस्ती—आकारेण सर्वातिशायी अयं गजः। स्त्रीसङ्गलोलुपः भवति। तेन च सुखं बध्यते। हस्तिग्राहिणः खलु हस्तिनः ग्रहीतुं करिणीं एव उपयुञ्जते। योषिन्मोहितः अयं मार्गे विद्यमानं महागर्तमपि अपश्यन् अन्धो जायते। स्त्रीसङ्गलोलुपतया गर्तपातं, यावज्जीवं बन्धं च प्राप्नोति। अतः गजात् इदं शिक्षितव्यं यत्—'स्त्रीषु मोहं परित्यजेत्'—इति।

१६ कुमारी—काचित् कुमारी कदाचित् स्वगृहागतेभ्यः अतिथिभ्यः भोजनं दातुं धान्यानि उलूखले क्षिप्त्वा अवहन्ति स। तदा तस्याः हस्तयोः विद्यमानानि कंकणानि (वलयाः) शंखनिर्मितानि उच्चैर्ध्वनिं उत्पादयामासुः। तदा सा क्रुद्धा सती वलयान्

एकैकशः बभञ्ज। द्वयोः पाण्योः द्वौ द्वौ एव शंखौ अवशेषितौ। अथापि उभयोः तयोर्ध्वनिः असह्य एव बभूव। अन्ते सा एकैकं कंकणमात्रं अवशोष्य अन्यत् भञ्जयामास। तदा च घोषः नैवाभूत्। अनेन वृत्तान्तेन इदं अस्माभिः तादृकुमारीशमुखात् शिक्षितव्यं यत्—सर्वत्र सञ्चरन्नपि नरः एकाकी एव चरेत्। बहूनां सहवासे कलहः स्यात्; द्वयोरवस्थानेऽपि परस्परवार्तालापः भवेत्। अतः एकाकित्वमेव शान्त्यै कल्पेत इति। तथा चोक्तम्—

"वासे बहूनां कलहः भवेद्वार्ता द्वयोरपि।
एक एव चरेत्तस्मात् कुमार्या इव कङ्कणः॥ इति॥

# ஸங்கீதம் போன்ற நுண்கலைகளும் ஸம்ஸ்க்ருதமும்

மோக்ஷ ஸாதனமாகவும், பக்தி முறைகளில் ஒன்ருகவும் கூறப்படுவது 'கீர்த்தனம்'. 'கீர்த்தனம்' என்ருல் பகவானின் நாமாவையும், பகவத் குணங்களையும், அவரது பெருமைகளையும் திரும்பத் திரும்ப வாயார இசைவடிவில் பாடுவது, சொல்லுவது போன்ற முறைகளைக் குறிப்பிடுவதாகும். மனமுருகி இறைவனைப்பற்றிப் பாடுவதே உண்மையான ஸங்கீதம் எனவே கீர்த்தனம் என்பதும்; ஸங்கீதமும் இயல்முறையில் ஒன்றியவைகளே.

இப்படி பகவத் நாமகுணங்களைக் கீர்த்தனம் செய்வதான ஸாதனத்தைப் பின்பற்ற நல்ல ஸங்கீத அறிவு, பயிற்சி, இனிய குரல் முதலியவை அமையவேண்டும். இவை முற்பிறப்பில் செய்த நற்செயல்களாலேயே ஏற்படும் என அனுபூதி ஸ்வரூபாசார்யர் குறிப்பிட்டுள்ளார்.

"गन्धर्वशास्त्रविचारेण षड्जातिसाक्षात्कारो जायते।
तत्र तु जन्मान्तरीयवासना हेतुः।"

யாக்ஞவல்க்ய ஸ்ம்ருதியில், ஸங்கீத விற்பன்னன் ப்ரஹ்மஸாக்ஷாத்காரத்தை நோக்காகக் கொண்ட மோக்ஷ மார்க்கத்தை அடைகிருன். அப்படி மோக்ஷமடையாவிடினும் அவன் பரமேச்வரனின் ஸேவகனுக இருந்து, அவருடன் ஆனந்தத்தை அனுபவிக்கின்ருன்", எனக் கூறப்பட்டுள்ளது.

" वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञानप्रयासेन मोक्षमार्गं विगच्छति ॥
गीतज्ञो यदि योगेन नाप्नोति परमां गतिम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ "

இனிய இசை நான்கு முக்கிய அம்சங்களை அடிப்படையாகப் பெற்றிருக்கவேண்டும். அவை ச்ருதி, லயம், ஸ்வரம், ஸாஹித்ய மெனப்படும். இந்த லக்ஷணங்கள் பொதுவாக நமது வட நாட்டு பாணி இசைக்கும் தென்னிந்திய கர்னாடக ஸங்கீதத்திற்கும் பொதுவானவை.

'ச்ருதி' என்பது ஒரு பாட்டைப் பாடவேண்டிய ராகத்திற்குத் தக்க முறையில் குரலை சரியாக ஸித்தப்படுத்திக் கொள்ளும் த்வனிக் கட்டுப்பாட்டைக் குறிக்கும். இது வாய்பாட்டில் குரலுக்கும், இசைக்கருவிகளுக்கும் பொதுவானது. லயம் என்பது தாளம். இசைக்கு ச்ருதி தாயாகவும் தாளம் தகப்பனாகவும் உள்ளவை என்பது பண்டை வழக்கு.

ஸங்கீத சாஸ்திரத்தின் நுணுக்கங்கள் பெருவாரியாக ஸம்ஸ்க்ருத நூல்களில் விரிவாகக் காணப்படுகின்றன. எல்லாவகை இசைகளிலும் அடிப்படை ஏழு ஸ்வரங்கள். அவை—ஷட்ஜம் (ஸ), ரிஷபம் (ரி), காந்தாரம் (க), மத்யமம் (ம), பஞ்சமம் (ப), தைவதம் (த), நிஷாதம் (நி). இப்பெயர்கள் ஸம்ஸ்க்ருதத்தில் அமைந்துள்ளதைக் கவனிக்கவேண்டும். இந்த ஸ்வரங்கள் எழக்கூடிய உடலுறுப்பு, அவைகளின் யாத்திரைகள், தேவதைகள் முதலிய விவரங்களும் ஸம்ஸ்க்ருத ஸங்கீத நூல்களில் விவரிக்கப்பட்டுள்ளன. சிலப்பதிகாரத்தின் அடியார்க்கு நல்லார் உரையிலும் 'ஏழிசை விளக்கம்', போன்ற தமிழ் இசை இலக்கண நூல்களிலும் ஸ்வரங்களின் பெயர்கள் மேற்கண்ட ஸம்ஸ்க்ருதச் சொற்களாலேயே குறிப்பிடப்படுகின்றன என்பதை நினைவில் கொள்ளவேண்டும்.

'காந்தர்வ சாஸ்த்ரம்', பரதமுனியின் நாட்ய சாஸ்த்ரம்', அதற்கு அபினவகுப்தர் இயற்றிய விரிவுரை, 'நாரதீய சிக்ஷா'' 'ப்ருஹத்தேசீ'. 'ஸங்கீத ரத்னாகரம்'. கீதாலங்கார நிர்தேசம், 'பரதகோசம்', 'ஸங்கீத ஸுதாநிதி', 'சதுர்தண்டி ப்ரகாசிகா', போன்ற எண்ணற்ற ஸங்கீத சாஸ்த்ர நூல்கள் ஸம்ஸ்க்ருத மொழியில் எழுதப்பட்டுக் காண்கின்றன.

" புனிறுதிர் குழவிக்கிலிருந்து பசும் பயிறுவளர்த்து
பொன் கதிருக ஆக்குபொன் கொழிக்கும் காவிரியே "

—புறநானூறு



श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ८० பாடமாலா தொடர் 80

## शततमः पाठः — பாடம் 100 (தொடர்ச்சி)

2. ஸம்ஸ்க்ருதத்தில் மொழி பெயர்க்கவும். தடித்த எழுத்திலுள்ளவைகளை ஸமஸ்தபதமாக எழுதவும்.

1. பால் சங்கு போல் வெண்மையானது.

2. யானை நீண்ட துதிக்கையால் தென்னை மரத்திலிருந்து மட்டைகளை விழ்த்துகிறது.

3. யானையின் காதுகள் முறம் போல் அகன்றவை.

4. வாழ்க்கை நீர்க்குமிழிபோல் நிலையற்றது.

5. வானரர்களில் சிறந்த (सिंह அல்லது शार्दूल சொல்லைப் பயன்படுத்தவும்) அனுமான் சீதையை ஸமாதானப்படுத்தினார்.

6. அனுமான் லங்கா நகரத்தில் சிறந்த பதிவிரதையான (रत्न என்ற சொல்லைப் பயன்படுத்தவும்.) ஸீதையைக் கண்டார்.

7. அவன் நலிந்த ஆடைகளை எறிந்து விட்டுப் புதிய ஆடைகளை அணிகிறான்.

8. உன் பற்கள் முத்து போல் வெள்ளையாக உள்ளன.

துதிக்கை शुण्डा மட்டை पत्रकाण्डं முறம் शूर्पः நீர்க்குமிழி बुद्बुदः நலிந்த जीर्ण ஸமாதானப்படுத்தினார். समाश्वासयामास அணிகிறான் परिधत्ते

3. விக்ரஹ வாக்யம் எழுதவும். ஸமாஸத்தின் பெயர் எழுதவும்:

1 पूर्णचन्द्रः
2 शुक्लपक्षः
3 कैलासपाण्डरः
4 पीनायतविशालं (उरः)
5 प्रियसुहृद्
6 प्रियसखी
7 कृष्णसर्पः
8 निर्जनप्रदेशः
9 श्यामावदातः
10 निम्नोन्नता (भूमिः)

## एकशततमः पाठः —பாடம் 101

# द्विगुसमासः

ஸமாநாதிகரண விசேஷணத்தை முதல் பதமாகக் கொண்ட கர்மதாரய ஸமாஸத்தில் முதல் பதம் எண்ணிக்கையைக் குறிக்கும் சொல்லாக அமையுமானால் द्विगुः என்ற விசேஷப் பெயரைப் பெறும். எனவே இது கர்மதாரய ஸமாஸத்தின் உட்பிரிவாகும். உதாரணம் மிகவும் குறைவு. सप्तऋषयः = सप्तर्षयः (Seven Stars of the Great Bear) ஸப்தரிஷி மண்டலம்.

இதே ஸமாஸம் பல பொருள்களை ஒரு சமுதாயமாக (Collective noun போல்) குறிப்பிடுவதாகவும் அமையும். அப்போது ஸமாஸ பதம் ஒருமையில் வரும். ஸமாஸமடையும் பதம் ஆண்பால் பெண்பால் நபும்ஸகலிங்கம் எதுவாக இருந்தாலும் ஸமாஸ பதம் ஸ்திரீலிங்கத்திலோ நபும்ஸகலிங்கத்திலோ வரும்.

உதாரணம்:

भुवनं (न) त्रयाणां भुवनानां समाहारः = त्रिभुवनं = மூவுலகு
लोकः (पुं) त्रयाणां लोकानां समाहारः = त्रिलोकं/त्रिलोकी
गङ्गा (स्त्री) सप्तानां गङ्गानां समाहारः = सप्तगङ्गं
नदी (स्त्री) पंचानां नदीनां समाहारः = पंचनदं = பஞ்சாப்
वटः (पुं) पंचानां वटानां समाहारः = पंचवटी
ஐந்து ஆல் (பஞ்சவடி)
नलः (पुं) पंचानां नलानां समाहारः = पंचनली
(ஐந்து நளர் கூட்டம்)

[தமயந்தியின் ஸ்வயம்வரத்தில் அவளை மணக்க ஆசை கொண்டு இந்திரன், அக்னி, யமன், வருணன் ஆக நான்கு தேவர்களும் நளன் வேஷம் பூண்டு நளன் பக்கத்து ஆஸனங்களில் அமர்ந்தார்கள். ஸரஸ்வதி தேவியே மணமக்களுக்கு மண்டபத்தில் உள்ள மன்னர்களின் பெருமை கூறி, பிடித்திருந்தால் மாலையிடு என்று கூறுகிறாள். ஐந்து நளன்கள் ஒரே தோற்றமாக இருப்பதைக் கண்டு ஐவர்களுடைய பெருமையையும் விளக்கும் வண்ணம் ஐந்து பொருள் தரும் வகையில் அறிமுகம் செய்து வைக்கிறாள். தமயந்தி அந்த தேவர்களையே சரணடைந்து நளனின் மேல் ஆணை வைத்து ஸ்வய ரூபம் எடுத்துக் கொள்ளும்படி வேண்டினாள்.

வேறு வழியின்றி தேவர்கள் தங்கள் ஸ்வய ரூபத்தில் வரத் தமயந்தி உண்மையான நளனுக்கு மாலையிடுகிருள் என்பது வரலாறு. ஸ்ரீஹர்ஷர் என்ற கவி தனது நைஷத மஹாகாவ்யத்தில் இந்த கட்டத்தை ஐந்து பொருள் தரும்படி மிக நுட்பமாகப் பாடியிருக்கிருர். அந்த ஸர்கத்துக்கு "பஞ்சநளீ" என்று பெயர்.]

## द्वन्द्वसमासः

उभयपदार्थप्रधानः द्वन्द्वः இவ்வகை ஸமாஸத்தில் இரு பதங்களின் பொருள்களும் சமமான முக்கியத்துவத்தை அதாவது அடுத்த பதத்துடன் இணைவதற்கு சம உரிமையைப் பெற்றிருக்கும்.

உதாரணம் :

1 सीता लक्ष्मणौ रामं अनुगच्छतः।
ஸீதையும் லக்ஷ்மணனும் ராமனைப் பின்தொடருகிருர்கள்.

सीता अनुगच्छति लक्ष्मणः अनुगच्छति।
இருவரும் பின்தொடர்வதில் சம உரிமை பெறுகிருர்கள்.

2 "नमो नमः शंकरपार्वतीभ्यां"।
(ஸ்ரீ சங்கருடைய உமாமஹேசுவர ஸ்தோத்திரம்.)

शङ्करश्च पार्वती च शङ्करपार्वत्यौ ताभ्यां शङ्करपार्वतीभ्यां என்பது விக்ரஹ வாக்யம். शंकराय नमो नमः पार्वत्यै नमो नमः என்று நமஸ்காரத்தில் இணைவதற்கு पार्वती शंकर என்ற சொற்கள் சம உரிமைப் பெற்றிருக்கின்றன.

குறிப்பு : பாடம் 97–பக்கம் 28ல் விக்ரஹ வாக்யத்திலுள்ள இரு பதங்களிலுள்ள வேற்றுமை உருபுகளும் மறைந்து பகுதிகள் இணைந்தபின் ஸமாஸபதத்தின் பொருளுக்கேற்றவாறு வேற்றுமை உருபுகள் மீண்டும் சேர்க்கப்படுகின்றன என்று கூறிஞேம். மேலே கொடுத்த உதாரணங்களால் सीता लक्ष्मणः शंकरः पार्वती என்ற பதங்களிலுள்ள ஒருமை உருபுகள் மறைந்து सीतालक्ष्मण, शङ्करपार्वती என்று இணைந்ததும், அப்பதத்துக்குப் பொருத்தமான இருமை வேற்றுமை உருபு (ஆண்பாலிலும் பெண்பாலிலும்) முறையே சேர்க்கப்படுகிறதை கவனிக்கவும். அடுத்து வரப்போகும் बहुव्रीहि என்ற சமாசத்திலும் சமாச பதத்துக்குத் தகுந்தான வேற்றுமை உருபுகள் அமைக்க வேண்டிய அவசியம் வரும். எனவே பொதுவாக ஸமாஸமடையும் பதங்களிலுள்ள வேற்றுமை உருபுகள் மறைந்து விடும் என்று பொதுவிதி கூறப்பட்டது.

இந்த சமாசம் इतरेतर योगद्वन्द्वः समाहारद्वन्द्वः என்று இரு வகைப்படும். தனி முக்கியத்துவம் கொண்டது, கூட்டு முக்கியத்துவம் கொண்டது என்று பொருள். அவ்விரண்டு வகை சமாசங்களும் द्विपद (இரண்டு பதங்களால் ஆனது) बहुपद (பல பதங்களாலானது) என்று இருவகைப்படும். ஆக द्वन्द्वसमासம் १ द्विपद इतरेतरयोग द्वन्द्वः २ बहुपद इतरेतरयोग द्वन्द्वः ३ द्विपद समाहारद्वन्द्वः ४ बहुपद समाहारद्वन्द्वः என்று நான்கு வகைப்படும்.

1 द्विपद इतरेतरयोगद्वन्द्वः

இணையும் இரு பதங்களும் ஒருமையில் இருந்தால் ஸமாஸ பதம் (1+1) இருமையில் வரும். இணையும் இரு பதங்களும் ஒருமையிலும் இருமையிலுமாய்/ஒருமையிலும் பன்மையிலுமாய்/ இருமையிலும் இருமையிலுமாய்/இருமையிலும் பன்மையிலுமாய்/ பன்மையிலும் ஒருமையிலுமாய்/பன்மையிலும் பன்மையிலுமாய் இருந்தால் ஸமாஸபதம் பன்மையில் வரும்.

रामश्च कृष्णश्च—रामकृष्णौ।
कृष्णश्च अर्जुनश्च—कृष्णार्जुनौ।
पार्वती च परमेश्वरश्च—पार्वतीपरमेश्वरौ।
अश्वश्च गजौ च / अश्वौ च गजश्च—अश्वगजाः।
अश्वौ च गजौ च / अश्वाश्च गजौ च /अश्वौ च गजाश्च / अश्वाश्च गजाश्च—अश्वगजाः।

2 बहुपद इतरेतरद्वन्द्व समासः—இது எப்போதும் பன்மையிலே வரும்.

रामश्च लक्ष्मणश्च भरतश्च शत्रुघ्नश्च = रामलक्ष्मणभरतशत्रुघ्नाः
युधिष्ठिरश्च भीमश्च अर्जुनश्च = युधिष्ठिरभीमार्जुनाः

3 द्विपदसमाहारद्वन्द्वः— समाहारद्वन्द्व சமாசத்திலும் விக்ரஹ வாக்யம் च என்ற இடைச்சொல்லமைந்து தான் காணப்படும். முடிவில் அவைகளின் கூட்டு என்பதை விளக்க तयोः समाहारः or तेषां समाहारः என்பது போன்ற சொற்றொடர் சேர்க்கப்படும். அப்பொழுது ஒருமையிலும் ஸ்திரீ/நபும்ஸகலிங்கங்களிலும் சொல் மாறுபடும். உதாரணம் :

पाणी च पादौ च तेषां समाहारः-पाणिपादं கைகால்கள்
गंगा च शोणश्च तयोः समाहारः गङ्गाशोणं।

" இருமை வகைதெரிந்து ஈண்டறம் பூண்டார்
பெருமை பிறங்கிற்று உலகு "

—திருக்குறள்






REGD. TRADE MARK

பளயகாட்ஸ்

# சங்கு மார்க்

## லுங்கிகள்

### கைக்குட்டைகள்



மதறாஸ் பளயகாட் கம்பெனி(பி)லிட்.

88 அரண்மனைக்காரத் தெரு. சென்னை-600 001.

*With the best compliments of:*

# SANGU MARK

**Handloom Lungies & Kerchiefs**



Manufacturers :

## THE MADRAS PALAYAKAT CO. (P) LTD.

Phone : **23040**

88, Armenian St., MADRAS-600 001

R. N. 30478/77—SAMSKRITA SRI—7-4-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



    



Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society. (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.